# गुह्यकाली महावज्र कवच स्तोत्रम्

ॐ अस्य श्री विश्वमङ्गल नाम्नो गुह्यकाली महावज्र कवचस्य
संवर्त ऋषिः अनुष्टुप् छन्दः एकवक्त्रादिशतवक्त्रान्ता
गुह्यकाली देवता
फ्रें बीजं ख्फ्रें शक्तिः छ्रीं कीलकं सर्वाभीष्ट सिद्धिपूर्वक आत्मरक्षणे जपे विनियोगः ।

ॐ फ्रें पातु शिरः सिद्धिकराली कालिका मम ।
ह्रीं छ्रीं ललाटं मे सिद्धिविकरालि सदावतु ॥ 1 ॥

श्रीं क्लीं मुखं चण्डयोगेश्वरी रक्षतु सर्वदा ।
हूं स्त्रीं क्णौं वज्रकापालिनी मे कालिकाऽवतु ॥ 2 ॥

ऐं क्रौं हनू कालसंकर्षणा मे पातु कालिका ।
क्रीं क्रौं भ्रुवावुग्रचण्डा कालिका मे सदावतु ॥ 3 ॥

हां क्षौं नेत्रे सिद्धिलक्ष्मीरवतु प्रत्यहं मम ।
हूं ह्रौं नासां चण्डकापालिनी मे सर्वदावतु ॥ 4 ॥

आं ईं ओष्ठाधरौ पातु सदा समयकुब्जिका ।
ग्लूं ग्लौं दन्तान् राजराजेश्वरी मे रक्षतात् सदा ॥ 5 ॥

जूं सः सदा मे रसनां पातु श्री जयभैरवी ।
स्फ्रें स्फ्रें पातु स्वर्णकूटेश्वरी मे चिबुकं सदा ॥ 6 ॥

ब्लूं ब्लौं कण्ठं रक्षतु मे सर्वदा तुंबुरेश्वरी ।
क्ष्रूं क्षौं मे राजमातङ्गी स्कन्धौ रक्षतु सर्वदा ॥ 7 ॥

फ्रों फ्रौं भुजौ वज्रचण्डेश्वरी रक्षतु मे सदा ।
स्रैं स्रौं वक्षःस्थलं पातु जयझङ्केश्वरी मम ॥ 8 ॥

फिं फां करौ रक्षतु मे शिवदूती च सर्वदा ।
छ्रैं छ्रौं मे जठरं पातु फेत्कारी घोराविणी ॥ 9 ॥

स्त्रैं स्त्रौं गुह्येश्वरी नाभिं मम रक्षतु सर्वदा ।
क्ष्रुं क्ष्रौं पार्श्वौं सदा पातु बाभ्रवी घोररूपिणी ॥ 10 ॥

ग्रूं ग्रौं कुलेश्वरी पातु मम पृष्ठं च सर्वदा ।
क्लूं क्लौं कटिं रक्षतु मे भीमादेवी भयानका ॥ 11 ॥

हैं हौं मे रक्षतादूरु सर्वदा चण्डखेचरी ।
स्फ्रों स्फ्रौं मे जानुनी पातु कोरङ्गी भीषणानना ॥ 12 ॥

त्रीं थ्रीं जङ्घायुगं पातु तामसी सर्वदा मम ।
ज्रैं ज्रौं पादौ महाविद्या सर्वदा मम रक्षतु ॥ 13 ॥

ड्रीं ठ्रीं वागीश्वरी सर्वान् सन्धीन् देहस्य मेऽवतु ।
खैं खौं शरीरधातून्मे कामाख्या सर्वदावतु ॥ 14 ॥

ब्रीं ब्रूं कात्यायनी पातु दशवायूंस्तनूद्भवान् ।
ज्लूं ज्लौं पातु महालक्ष्मीः खान्येकादश सर्वदा ॥ 15 ॥

ऐं औं अनोक्तं यत्स्थानं शरीरे अन्तर्बहिश्च मे ।
तत्सर्वं सर्वदा पातु हरसिद्धा हरप्रिया ॥ 16 ॥

फ्रें छ्रीं ह्रीं स्त्रीं हूं शरीरसकलं सर्वदा मम ।
गुह्यकाली दिवारात्रौ सन्ध्यासु परिरक्षतु ॥ 17 ॥

इति ते कवचं प्रोक्तं नाम्ना च विश्वमङ्गलम् ।
सर्वेभ्यः कवचेभ्यस्तु श्रेष्ठं सारतरं परम् ॥ 18 ॥

इदं पठित्वा स्वं देहं भस्म नैव अवगुण्ठ्य च ।
तत्तत् स्थानेषु विन्यस्य वद्ध्वादः कवचं दृढम् ॥ 19 ॥

दशवारान् मनुः जप्त्वा यत्र कुत्रापि गच्छतु ।
समरे निपतच्छस्त्रे अरण्ये स्वापद सङ्कुले ॥ 20 ॥

श्मशाने प्रेतभूताढ्यकान्तारे दस्युसङ्कुले ।
राजद्वारे सपिशुने सिन्धौ वातोर्मिचञ्चले ॥ 21 ॥

गिरौ दावाग्नि संदीप्ते गव्हरे सर्पवेष्टिते ।
तस्य भीतर्न कुत्रापि चरतः पृथिवीं इमाम् ॥ 22 ॥

न च व्यादिभयं तस्य नैव तस्करजं भयम् ।
भीतिश्च ग्रहजा नास्य विषजं च भयं नहि ॥ 23 ॥

न अग्नि उत्पातो नैव भूतप्रेतजः संकटः तथा ।
विद्युत् वर्षोपल भयं न कदापि प्रभाधते ॥ 24 ॥

न दुर्भिक्षभयं चास्य न च मारिभयं तथा ।
कृत्य अभिचारजा दोषाः स्पृशन्त्येनं कदापि न ॥ 25 ॥

सहस्रं जपतश्चास्य पुरणश्चरं उच्यते ।
तत्कृत्वा तु प्रयञ्जीत सर्वस्मिन्नपि कर्मणि ॥ 26 ॥

वश्यकार्य मोहने च मारणोच्चाटने तथा ।
स्तंभने च तथा द्वेषे तथा कृत्याभिचारयोः ॥ 27 ॥

दुर्गभंगे तथा युद्धे परचक्र निवारणे ।
एतत् प्रयोगात् सर्वाणि कार्याणि परिसाधयेत् ॥ 28 ॥

भूतावेशं नाशयति विवादे जयति द्विषः ।
संकटं तरति क्षिप्रं कलहे जयं आप्नुयात् ॥ 29 ॥

यदि इच्छेत् महतीं लक्ष्मीं तनयानायुरेव च ।
विद्यां कान्तिं तथौन्नत्यं यश आरोग्यमेव च ॥ 30 ॥

भोगान् सौख्यं विघ्न हानिं आलस्यं महोदयम् ।
अधीहि कवचं नित्यममुनामुञ्च च प्रिये ॥ 31 ॥

कवचेनां अमुना सर्वं संसाधयति साधकः ।
यद्यद् धायति चित्तेन सिद्धं तत्तपुरः स्थितम् ॥ 32 ॥

दुर्धटं घटयत्येतत् कवचं विश्वमङ्गलम् ।
विश्वस्य मङ्गलं यस्मादतो वै विश्वमङ्गलम् ॥ 33 ॥

सान्निध्यकारकं गुह्यकाल्या एतत् प्रकीर्तितम् ।
लिखितं चेद् गृहे तिष्ठेत् तथापि फलमश्नुते ॥ 34 ॥

यदीच्छसि सुरेशानि सर्वत्र जयमङ्गलम् ।
पठ बन्धून् पाठयस्व कवचं विश्वमङ्गलम् ॥ 35 ॥

संप्राप्यसि परां सिद्धिं गुह्यायां भक्तिमेव च ।
त्रिसन्ध्यं पठनात् देवि सर्वपापैः प्रमुच्यते ॥ 36 ॥

यस्मै कस्मै चिदप्येतन्न दद्याद्वै जिजीविषुः ।
दत्त्वा मरणं आप्नोति ससुत ज्ञाति बान्धवः ॥ 37 ॥

शिष्याय भक्तियुक्ताय साधकाय हिताय् च ।
विधिपूर्वं प्रदातव्यं नाभक्ताय कदाचन ॥ 38 ॥

षडाम्नाय स्थिता देव्यः सर्वा अत्र प्रतिष्ठिताः ।
अतः सर्वात्मा गोप्यं सत्यं सत्यं सुरेश्वरि ॥ 39 ॥

यस्मिन् कस्मिन्नपि मनावुपदेशो यदि प्रिये ।
तदैवात्राधिकारः स्यात् कवचे विश्वमङ्गले ॥ 40 ॥

गुह्यकाल्यां सदा भक्तिः षोडशाक्षरिको जपः ।
इदं च कवचं देवि त्रय्येषा कथिता मया ॥ 41 ॥

अभ्यस्यन्तः त्रयीमेतां चतुर्वर्णा द्विजातयः ।
भुक्त्वा भोगानघं हत्वा देहान्ते मोक्षं आप्नुयात् ॥ 42 ॥

॥ इति महाकाल संहितायां विश्वमङ्गल कवचं संपूर्णम् ॥